because he was always ready to learn as his dictum goes: " One should be ready to be a pupil to all for the attainment of all round scholarship."

His literary career.

His literary career, so far as his mention of King Ananta Deva is concerned, begins from before the reign of Ananta Deva (1028 A. D.). The period of his apprenticeship begins just after he completed his course of higher studies under Abhinavagupta. So, at the outset of his literary career, he appears as a translator. The fruit of his labour in this direction is the Vrihatkathāmañjarī. He was, as he says, the first writer to have conceived the idea of giving a Sanskrit rendering to Guṇādyā's Vrihatkathā in the Piśācha dialect. Second version of the Vrihatkathā, given in Kathāsaritsāgara by Bhatta Somadeva, is subsequent to it. But it is not written, as some say, seventy years after Kshemendra. Bhatta Somadeva was a younger contemporary of Kshemendra and he wrote the Kathā-sarit-Sāgara at the request of queen Sūryamatī who died along with her husband after the manner of Satīs in 1081 A. D.

After this he took to epitomising the Rāmāyaṇa, the Mahābhārata and the Vātsyāyanasutras. (Cf. Bhāratamañjarī, Rāmāyaṇamañjarī etc. )

Side by side with the work of translation and epitomising, he carried on his study of almost all the sciences and arts then known to the Kashmirian world. He knew Mathematics, Astrology, Medicine, Surgery, Politics, Erotics, Buddhist philosophy and creed and Ma[illegible] śāstra, It is believed that he began to be called Vyāsadāsa after his composition of the Bhāratamañjarī.

His Vocabulary.

Rich was the vocabulary that was at his disposal and that he could readily utilise to picture the feelings and the sentiments he wanted to represent in words. Most of the words of his

diction are at present wholly unintelligible. The similes and other figures of speech, that he indulged in, are pat to the occasion and complete in themselves. They are appropriate and taken from various professions, from the scenes of daily life, from what passed just before his eyes.

His wit and humour.

He was witty enough to adopt the portions from stock works and used them in expressing his own ideas without marring their sense. Very often he employed them in lampoons and caricatures in condemning the character of quack physicians and other crooked persons.[1]

His satires.

Kshemendra's chief forte lay in satires and criticism. His Darpadalana is a masterpiece of the satirical literature in Sanskrit. It points out the vanity of human wishes. Kalāvilāsa, Deśopadeśa, Samayamātrikā, Narmamālā belong to the same species. In them he has levelled his criticism against hypocrisy in various guises. No vice, that prevailed in his time, could escape his vigilant eyes. His criticism was not altogether destructive. He had a constructive programme for reforms. This he furnished to his people in the tenth canto of the Kalāvilāsa. About the tricks of the clerks or the Kāyasthas, their forcing bribes from the people, and their writing dubious letters, the reader is referred to the Narmamālā.

1. See the Deśopadeśa and the Narmamālā. Also compare the following in this connection:—

१ सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति ।

२ यमाय धर्मराजाय मृत्यवे चान्तकाय च ।

३ समः शत्रौ च मित्रे च तथा मानापमानयोः ।

४ + + पद्मपत्रमिवाम्भसा ॥

He was a great traveller. If not so, at least he traversed the whole literature of travels and tours and mingled freely with foreigners who supplied him with the accounts of cities and towns outside Kashmir. The Kābulīs, the Turks, the Chinese, the Jālandharis, the Gaudas, the Dards and the Afghans find their mention together with their peculiar features of service and mental temperaments in the Samayamātrikā.

His acquaintance with foreign countries.

From the chronological point of view, Kshemendra's works stand in the following order :—(a) Vrihatkathāmañjarī, Bhāratamañjarī, Rāmāyaṇamañjarī. (b) Pavanapañchāśikā and Suvrittatilakam. (c) Vinayavallī, Lāvaṇyavatī, Munimatamīmāṃsā, Nītilatā, Avadānakalpalatā, Avasarasāra, Lalitaratnamālā, Muktāvalīkāvyam, Vātsyāyanasūtrasāra, and Auchityavichāracharchā. (d) Padyakādambarī, Śaśivaṃśakāvyam, Deśopadeśa, Narmamālā, Chitrabhārata, Kanakajānakī, Amritataraṅga, Chaturvargasaṅgraha, and Kavikaṇṭhābharaṇa. (e) Darpadalana, Kalāvilāsa, Samayamātrikā, Sevyasevakopadeśa, (f) Daśāvatāracharita and Chārucharyā.

His Works.

A work named Lokaprakāśa has also been ascribed to his authorship. But it seems to be the work of a third rate writer of the Mughal period and bristles with numerous Persian terms and Mohomadan names such as Salām Bandagī, Khwājā, Mīr etc. etc.

The following are the authors quoted in the above works of Kshemendra :— [illegible]alarāja, Tuñjīna, Kalaśa, Kālidāsa, Bāṇa, Harśa, Ratnākara, Parimala, Vallaṭa, Gaudīnaka, Rājaśekhara, Indurāja, Vīradeva, Sāhila, Bhaṭṭa Nārāyaṇa, Dīpaka, Muktākaṇa, Śyāmala, Bhavabhūti, Lāṭadiṇḍīra, Risso, Yaśovarmā, Chakra, Vāgbhaṭṭa, Bhartrimeṇṭha, Abhinanda, Bhāravī, Bhartriharī, Chandra

AUTHORS QUOTED BY KSHEMENDRA.

ka, Śivasvāmin, Indrabhānu[2], Mayūra, Muktikalaśa,[3] Dāmodaragupta, Bhaṭṭa Vāchaspati, Bhaṭṭa ballaṭa, Vidyānanda, Bhaṭṭa Udaya-Siṃha[4] and Rājaputra Lakshmaṇāditya.[5]

MADHUSUDAN KAUL.

1. Indrabhānu. He was a foreign minister to King Bhīmaśāhi.
2. He was the great grand-father of Bilhaṇa.
3. Son of Ratnasimha, King of Srī Vijayeśa and author of Lalita-mahākāvya and Bhaktibhava-mahākāvya.
4. Udayasimha and Lakshmanāditya were the pupils of Kshemendra.

अथ

# देशोपदेशः ।

## काश्मीरिकविद्वद्वरक्षेमेन्द्रविरचितः ।

### ( प्रथम उपदेशः )

देवो जयति हेरम्बः स्वदन्तविसखेलनैः ।
यस्योच्चैस्तत्प्रभाः शुभ्रा हसन्तीव दिशो दश ॥ १ ॥

जयन्ति वेश्या व्यसनाभ्रविद्युतो
जयन्ति कौटिल्यकलानटा विटाः ।
जयत्यजस्रं जनवृक्षपातिनी
प्रकृष्टमायातटिनी च कुट्टनी ॥ २ ॥

ये दम्भमायामयदोषलेश-
लिप्ता न मे तान्प्रति कोऽपि यत्नः ।
किन्त्वेष हासव्यपदेशयुक्त्या
देशोपदेशः क्रियते मयाद्य ॥ ३ ॥

हासेन लज्जितोऽत्यन्तं न दोषेषु प्रवर्तते ।
जनस्तदुपकाराय ममायं स्वयमुद्यमः ॥ ४ ॥

सदा खण्डनयोग्याय तुषपूर्णाशयाय च ।
नमोऽस्तु बहुबीजाय खलायोलूखलाय च ॥ ५ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
वृत्तिच्छेदकृताभ्यासः खलो निर्वाणदीक्षितः ॥ ६ ॥

जिह्वादूषितसत्पात्रः पिण्डार्थी कलहोत्कटः ।
तुल्यतामशुचिर्नित्यं बिभर्ति पिशुनः शुनः ॥ ७ ॥

मन्दः पापग्रहः क्रौर्यादनिष्टः शुभकर्मणाम् ।
पिशुनः शनितुल्योऽपि चित्रं यदशनिर्नृणाम् ॥ ८ ॥

अहो बत खलः पुण्यैर्मूर्खोऽप्यश्रुतपण्डितः ।
स्वगुणोदीरणे शेषः परनिन्दासु वाक्पतिः ॥ ९ ॥

खलः सुजनपैशुन्ये सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥ १० ॥

सत्साधुवादे मूर्खस्य मात्सर्यगलरोगिणः ।
जिह्वा कङ्कमुखेनापि कृष्टा नैव प्रवर्तते ॥ ११ ॥

मायामयः प्रकृत्यैव रागद्वेषमदाकुलः ।
महतामपि मोहाय संसार इव दुर्जनः ॥ १२ ॥

लज्जाव्यसनसम्मोहहेतुना कामकारिणा ।
को नाम जघनेनेव खलेन न खलीकृतः ॥ १३ ॥

निकटस्थः प्रभोर्नित्यं विस्मृतस्वपराशनः ।
कर्णे पठति पैशुन्यं ब्रह्मविद्यामिवाधमः ॥ १४ ॥

खलो वक्त्येव सर्वस्य दोषं वक्ति खलस्य कः ।
दोषो मलिनवस्त्रस्य कदा केन विचार्यते ॥ १५ ॥

खचित्रमपि मायावी रचयत्येव लीलया ।
लघुश्च महतां मध्ये तस्मात्खल इति स्मृतः ॥ १६ ॥

खलेन धनमत्तेन नीचेन प्रभविष्णुना ।
पिशुनेन पदस्थेन हा प्रजे क्व गमिष्यसि ॥ १७ ॥

भग्नदन्त इव व्यालः श्रेयान्मूर्खखलो वरम् ।
पक्षवानिव कृष्णाहिर्नित्वेव खलपण्डितः ॥ १८ ॥

दूषणानुगतो नित्यं जनस्थानविनाशकृत् ।
दुर्मदो विबुधद्वेषी पुरुषादः खरः खलः ॥ १९ ॥
खलः प्रवक्ते दैवादार्जवे सुजनस्य यत् ।
तदूर्ध्वबाहुर्विपिने मर्कटः कुरुते तपः ॥ २० ॥
गुणान् स्तौतीत्यसम्बद्धं स्निह्यतीत्यसमञ्जसम् ।
ददातीति विरुद्धार्थं खलो हन्तीति नानृतम् ॥ २१ ॥
अनिशं जपता कर्णे मन्ये पैशुन्यमातृकाम् ।
कृत्वेश्वरं वशे ग्रस्ताः खलेन निखिला दिशः ॥ २२ ॥
ते दोषा एव न गुणाः कस्तेषामर्जने गुणः ।
येषां खलसभाद्वारि मस्तके पतितं रजः ॥ २३ ॥
भ्रुकुटिकुटिलदृष्टिर्धातुरन्यैव सृष्टि-
धनलवमदलिप्तः प्रौढवादानुलिप्तः ।
सदसि कुटिलदोषैर्दुर्जनः सज्जनानां
मलिनयति यशांसि स्फारकैलासभांसि ॥ २४ ॥

दुर्जनवर्णन नाम प्रथम उपदेशः ॥

---

## ( द्वितीय उपदेशः )

कर्कशाय नमस्तस्मै सर्वाशानिष्फलाय च ।
पर्यन्ते विटभोज्याय लुब्धाय खदिराय च ॥ १ ॥
यतेन्द्रियः पांसुशायी निस्संगः प्रसृतिंपचः ।
कदर्यो मुनिरक्रुद्धः किन्तु तृष्णास्य वर्धते ॥ २ ॥
लुब्धात्सर्वजनानिष्टात्कष्टचेष्टानिकेतनात् ।
विमुखाः सततं यान्ति श्मशानादिव बांधवाः ॥ ३ ॥
धूत्कृतस्य जनैर्नित्यं निर्निद्रस्य निशास्वपि ।
उलूकस्येव लुब्धस्य न कल्याणाय दर्शनम् ॥ ४ ॥

कोपविकृतवक्त्रस्य मन्ये सर्वात्मना हितम् ।
कदर्यस्यातिपूर्णस्य पिटकस्येव पीडनम् ॥ ५ ॥

धनं भूमिर्गृहं दाराः सर्वथा जन्मसञ्चितम् ।
परार्थमेव पर्यन्ते कदर्यस्य जिनस्य च ॥ ६ ॥

सहस्राक्षस्तृणतुषे वज्रहस्तो गृहव्यये ।
अशनाच्छादनच्छेदात्कदर्यः पाकशासनः ॥ ७ ॥

नीरसस्य कदर्यस्य माधुर्यं वचने कथम् ।
गृहे लवणहीनस्य लावण्यं वदने कुतः ॥ ८ ॥

कदर्यश्चर्मवसनो रूक्षोऽस्नानात्सदा जटी ।
मलेन श्यामलगलः शूली विलवणाशनात् ॥ ९ ॥

कार्यपीडानिरोधेऽपि नार्थं मुञ्चति सग्रहः ।
संचयेष्वेकदृष्टिश्च कदर्यः शुक्रतां गतः ॥ १० ॥

निस्सत्त्वस्य समुद्रस्य विच्छायस्य पल्याशिनः ।
लुब्धस्यावनिसक्तस्य लोकातीतं विचेष्टितम् ॥ ११ ॥

कोऽन्यः कदर्यसदृशो दाता जगति जायते ।
नाश्नात्यदत्त्वा योऽर्थिभ्यो गले हस्तं गृहेऽर्गलम् ॥ १२ ॥

नक्ताशिनः शाकमूलशुद्धयावकभोजिनः ।
अहो बत कदर्यस्य तथापि नरके स्थितिः ॥ १३ ॥

पटी पितामहक्रीता तत्पूर्वाप्तश्च शाटकः ।
दिव्यवस्त्रस्य लुब्धस्य क्षीयते न युगैरपि ॥ १४ ॥

नष्टोत्सवस्य लुब्धस्य त्यक्तपुण्यादिनस्थितेः ।
अदृष्टलवणा भार्या प्रातिवेश्यैर्निमन्त्र्यते ॥ १५ ॥

मुष्टिमानेन दत्त्वापि लुब्धो धान्यं गृहव्यये ।
मृतो मुष्टिं समादाय क्लेशमूल्यं न गच्छति ॥ १६ ॥

पितुः पितृदिने लुब्धो देशोत्सवदिनेषु च ।
मृतकाशौचमाचष्टे ज्वरव्याजं करोति वा ॥ १७ ॥
कदर्यः स्वजनं दृष्ट्वा यदृच्छोपनतं गृहे ।
करोति दारकलहव्याजेनानशनव्रतम् ॥ १८ ॥
कदर्यः कुशलप्रश्नं न करोति शृणोति वा ।
अभ्यागतस्य सायाह्ने पश्चाद्भोजनशंकया ॥ १९ ॥
गीतादुद्विजते स्पर्शं नेच्छति द्वेष्टि भोजनम् ।
विमुखः सौरभे रुपेऽलुब्धः सर्वेन्द्रियोज्झितः ॥ २० ॥
सत्यं कृतार्थिकलहात्कदर्यादुत्तमः शवः ।
यः समानो निरुच्छ्वासः क्रव्यादैरुपजीव्यते ॥ २१ ॥
जीवतः सञ्चिताद्यस्य न निर्याति कपर्दिका ।
म्रियमाणस्य तस्यैव सकृत्सर्वं प्रयाति च ॥ २२ ॥
भर्तृव्ययं निवार्यैव व्ययभीरोः करोत्यलम् ।
पुत्रकार्ये कदर्यस्य भार्या जारोत्सवव्ययम् ॥ २३ ॥
चण्डालस्यापि साहाय्ये दृष्ट्वा लाभलवोद्गतिम् ।
चरणौ चुम्बति चिरं कदर्यः कार्यगौरवात् ॥ २४ ॥
पश्चात्संशुद्धिसन्त्रासान्नियमं समुदाहरन् ।
विषवद्वर्जयत्येव कदर्यः पानभोजनम् ॥ २५ ॥
नैष्ठुर्यं नैरपेक्ष्यञ्च शाठ्यं क्रौर्यमनार्जवम् ।
कृतविस्मरणं यच्च तत्कदर्यस्य लक्षणम् ॥ २६ ॥
वित्तव्ययवशाल्लोपमुपकारेऽपि वाञ्छति यः ।
कृतघ्नो गर्हितः सद्भिः स कदर्यो विचारिणाम् ॥ २७ ॥
अचुल्लीपाकमस्मेरमसुखं निर्जनञ्च यत् ।
यदुत्सवकथाहीनं तत्कदर्यगृहं विदुः ॥ २८ ॥
मन्दाग्निः पाण्डुरोगी च लालास्यश्चुल्ललोचनः ।
दुर्गन्धवदनो यश्च स कदर्योऽभिधीयते ॥ २९ ॥

दन्तेषु मलपूर्णेषु कम्बले धूमपिङ्गले ।
नूनं स्थिता श्रीर्लुब्धस्य जघन्यजनवासिनी ॥ ३० ॥
दन्ता ज्वरितमूत्राभा मुखं पक्कफलोपमम् ।
शुष्काशिनः कदर्यस्य शुष्कचर्मनिभं वपुः ॥ ३१ ॥
कुम्भीपाकेषु येनार्थाश्चिरं गर्तेषु पीडिताः ।
स लुब्धस्तेन पापेन मन्ये कुम्भीषु पच्यते ॥ ३२ ॥
सोऽपि सर्वङ्कषः कालः सत्यं लुब्धस्य विस्मृतः ।
षष्टिवर्षस्य धान्यस्य यः करोति न विक्रयम् ॥ ३३ ॥
नृत्यत्यवृष्टिषु पुरा ह्यतिवृष्टिषु नृत्यति ।
दुर्भिक्षोपप्लवाकांक्षी कदर्यो धान्यगौरवात् ॥ ३४ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा रात्रिर्लुब्धचेतसः ॥ ३५ ॥

विरमति मतिहीनो लाभलोभेन वित्तं
जरयति यतिरूपः संयमादिन्द्रियेच्छाम् ।
चरति च रतिविघ्नं सव्ययत्वाद्गृहिण्याः
स्वधननिधनरक्षाचार्यवर्यः कदर्यः ॥ ३६ ॥

कदर्यवर्णनं नाम द्वितीय उपदेशः॥

---

## ( तृतीय उपदेशः )

अर्थलुब्धामतिप्रौढां चित्रालंकारहारिणीम् ।
प्रौढां वाणीमिव कवेः स्वच्छन्दां बन्धकीं नुमः ॥ १ ॥
स्पृहारागविनिर्मुक्ता निष्कामा कामचारिणी ।
स्वध्यानशीला गणिका योगिनीव गुणोज्झिता ॥ २ ॥
नीचोपभोग्यविभवा सदाचारपराङ्मुखी ।
दुर्जनश्रीरिव चला वेश्या व्यसनकारिणी ॥ ३ ॥

न लोभात्स्थानमस्थानं जानीते मत्रंगामिनी ।
आवेशमूढमनसां वेश्या पर्यन्तनिष्फला ॥ ४ ॥

नोपशाम्यति वृद्धापि समस्ताहरणोन्मुखी ।
तृष्णेव बन्धकी नित्यं दुष्पूरा केन पूर्यते ॥ ५ ॥

संकोचितांगी सुरते रक्तापचयकारिणी ।
जरेव वारवनिता जनतारूपहारिणी ॥ ६ ॥

न सिद्ध्यति धिया भक्त्या शक्त्या युक्त्या गुणेन वा ।
कुलटा खलसेवेव मानम्लानिकरी परम् ॥ ७ ॥

न बालेष्वपि सस्नेहा तरुणेषु न सस्पृहा ।
न सानुरोधा वृद्धेषु मृत्योर्मतिरिवासती ॥ ८ ॥

अपि वर्षशतं स्थित्वा सदा कृत्रिमरागिणी ।
वेश्या शुकीव निश्श्वासा निस्सङ्गेभ्यः पलायते ॥ ९ ॥

पणेन हृतसर्वस्वा कृतलोलाक्षविभ्रमा ।
वेश्या कितवमायेव धूर्तानामपि मोहनी ॥ १० ॥

कृत्रिमं दृश्यते सर्वं चित्तसद्भाववर्जिता ।
सूत्रप्रोतेव चपला नर्तकी यन्त्रपुत्रिका ॥ ११ ॥

निर्यात्येको विशत्यन्यः परो द्वारि प्रतीक्षते ।
यस्या सभेव सा वेश्या कार्यार्थशतसङ्कुला ॥ १२॥

मधुधारेव वचासि क्षुरधारेव चेतासि ।
वेश्या कुठारधारेव मूलच्छेदाय कामिनाम् ॥ १३ ॥

मौग्ध्ये बाला रतौ प्रौढा वृद्धा मायाशतेषु च ।
सा कामरूपिणी वेश्या रक्तमांसैर्न तृप्यति ॥ १४ ॥

धीमान्मूढो धनी निस्स्वः शुचिश्चोरो लघुर्गुरुः ।
भवितव्यतयेवायं वेश्यया क्रियते जनः ॥ १५ ॥

असूचिभेद्यामासाद्य बालां प्रौढाभिलाषिणीम् ।
हा कष्टं मुषितोऽस्मीति प्रभाते वक्ति कामुकः ॥ १६ ॥

स्पष्टकूटकुचा भाटीं प्रौढवादाय बालिका ।
मुष्णाति सुरतायोग्या केवलं परिचुम्बनैः ॥ १७ ॥

मात्रा समर्पिता लोभादभियुक्तैर्विचारिता ।
जन्मावधिं विना वेत्ति वेश्या पुरुषसङ्गमम् ॥ १८ ॥

शयनेऽहं तवाद्यैव बाला प्रथमपुष्पिता ।
इत्युक्त्वा कामुकान्प्रातर्वेश्या भुंक्ते सदोत्सवम् ॥ १९ ॥

न निर्विचारसुरतव्यापारोपरमः क्वचित् ।
आशैशवादनिच्छन्त्या यस्याः सा कस्य रागिणी ॥२०॥

वेश्याया जघनोद्याने फुल्ले यौवनपादपे ।
दिवानिशं भवत्येव सुवर्णकुसुमोच्चयः ॥ २१ ॥

पुण्यैः पण्यवधूलग्ने यौवनाख्ये शरत्फले ।
सहस्रभगमात्मानं शक्ररूपं समीहते ॥ २२ ॥

स्तनौ नखमुखोच्छिष्टौ वेश्यायाः खण्डितोऽधरः ।
न रागाय न लज्जायै केवलं पण्यवृद्धये ॥ २३ ॥

पर्यन्तविरसाः सर्वे भावाः संसारवर्तिनः ।
आदिमध्यान्तविरसो वेश्यारतिसमागमः ॥ २४ ॥

कटिर्विटशतैर्भृष्टा पान्थपीतोज्झितं मुखम् ।
स्तनौ सहस्रमृदितौ यस्याः कस्यास्तु सा निजा ॥ २५ ॥

स्पष्टं वराशनं त्यक्त्वा भुंक्ते कदशनं रहः ।
विश्ववञ्चनशालिन्या वेश्ययात्मापि वञ्च्यते ॥ २६ ॥

यामं कथाभिः पानेन परमीर्ष्यारुषा परम् ।
वेश्या क्षिपति मुग्धस्य शेषं कृतकनिद्रया ॥ २७ ॥

मोक्षगामि मनो मन्ये वेश्याया रतिसङ्गमे ।
लिप्यते यन्न रागेण पद्मपत्रमिवाम्भसा ॥ २८ ॥

ब्रूते प्रभाते मिथ्यैव दासी जन्मदिनोत्सवम् ।
भुक्त्वैव बन्धुनिधनं शिरःशूलं करोति वा ॥ २९ ॥

विरसा सेव्यते वेश्या जनैर्नित्यरजस्वला ।
न कामाय न धर्माय धननाशाय केवलम् ॥ ३० ॥

प्रम्लाने यौवने शुक्लकेशरञ्जनतत्परा ।
वश्ययोगार्थिनी याति वेश्या कस्य न शिष्यताम् ॥३१॥

मत्स्ययूषरसैर्दासी घृतक्षीरपलाण्डुभिः ।
प्रियं पराङ्मुखमिव प्रत्यानयति यौवनम् ॥ ३२ ॥

षष्टिवर्षापि यद्वेश्या बालेवोन्मार्जिताननना ।
तद्युगादौ तया पीतं नूनं काकैः सहामृतम् ॥ ३३ ॥

कूटविक्रयदोषेण ब्रह्मस्वहरणेन च ।
पतितौ पण्यवनिता स्तनौ यत्नेन गूहते ॥ ३४ ॥

क्क तदस्ति न जानीमः पिबामः किं न तद्विषम् ।
तथैव दृश्यते येन प्रपुराणापि पुंश्चली ॥ ३५ ॥

छन्नाननार्धा प्रोत्क्षिप्तस्तनी शीर्णशिरोरुहा ।
मुष्णाति तरुणीभ्रान्त्या मुग्धान्वृद्धापि बन्धकी ॥ ३६ ॥

क्षीणध्वान्तपटा वृद्धा सवाष्पा नष्टतारका ।
वेश्या प्रभातवेलेव सर्वस्वापहृतिक्षमा ॥ ३७ ॥

रक्तच्छाया पाण्डुमुखी प्रसवैः कृशतां गतः ।
सा गुरून्सूत्रकं रक्षां याचते भूतशङ्कया ॥ ३८ ॥

मस्तके भुजयोः कण्ठे जतुरक्षाशतान्विता ॥
भूतवित्रासजननी सा भूतबलिमिच्छति ॥ ३९ ॥

सुधौतवसना तीर्थे स्थित्वा पुण्यदिनेऽसकृत् ।
रण्डावेशेन कुरुते वेश्या मैथुनविक्रयम् ॥ ४० ॥

प्रसिद्धायतने वेश्या कृत्वा लिङ्गार्चनव्रतम् ।
महाश्वेतेव निर्याति शैवलोकजिगीषया ॥ ४१ ॥

सा रागकोशशपथक्षीणभिक्षाकराधरा ।
शीताम्बरा निष्पुरुषा निशि शीतेन कूजति ॥ ४२ ॥

नित्याभ्यक्ता वार्तैलिकजनाना सा स्त्रीमसा ।
न स प्रतीपमायाति यस्यायाति पुरः पथि ॥ ४३ ॥

अर्थार्थिनी देवपूजास्वस्थानश्रुतितत्परा ।
सदा गणकगेहं सा प्रष्टुं याति ग्रहस्थितिम् ॥ ४४ ॥

वाराणसीं व्रजाम्येव किं तु दोषोऽस्ति दुःसहः ।
पलाण्डुना विना तत्र न जीवामीति वक्ति सा ॥ ४५ ॥

प्रम्लाननयना दैन्यजल्पैः प्रधमस्वना ।
दुःखोच्छ्वासवती वृद्धा कञ्चुकयाचन नोचिता ॥ ४६ ॥

नष्टच्छायाञ्जनवती रोगार्ता मातृवादिनी ।
भूतावेशोल्वणा वेश्या मुक्ता सिद्धगुणैरिव ॥ ४७ ॥

हृदयनयनचौरी स्मरावेशेन वेश्या
ललितवलितरङ्गभ्रूलता तावदेव ।
स्थित इह धनिकोऽद्य प्रातरागच्छ गच्छे-
त्यनुचितमुचितं वा वक्ति यावन्न किञ्चित् ॥ ४८॥

———

॥ वेश्यावर्णनं नाम तृतीय उपदेशः ॥

———

## ( चतुर्थ उपदेशः )

हालाहलोल्वणां कालीं कुटिलां कुट्टनीं नुमः ।
वेश्यारतिनिधानस्य क्षयरक्षामहोरगीम् ॥ १ ॥

शक्रराज्यापहरणक्षमा विबुधवर्जिता ।
कुट्टनी ब्रह्महत्येव भवस्यापि भयप्रदा ॥ २ ॥

कालकापालिकोत्तालकंकालाकृतिराकुला ।
कुट्टनी मानुषानत्ति रक्ताकर्षणशालिनी ॥ ३ ॥

क्षणाद्बुधोऽप्यबुधतां समुद्रोऽपि निमुद्रताम् ।
कुट्टनीदृष्टिपतितः शेषोऽप्यायात्यशेषताम् ॥ ४ ॥

भगदत्तप्रभावाढ्या कर्णशल्योत्कटस्वरा ।
सेनेव कुरुराजस्य कुट्टनी किन्तु निष्कृपा ॥ ५ ॥

न कान्तं न कलावन्तं न शूरं सहते सदा ।
प्रतीपचारिणी घोरा राहुच्छायेव कुट्टनी ॥ ६ ॥

नापेक्षते परिचयं नोपकारं स्मरत्यपि ।
सर्वदैव विरागान्ता खलमैत्रीव कुट्टनी ॥ ७ ॥

सदंष्ट्रा कुट्टनी क्रूरा भुजंगाकृष्टिकारिणी ।
याता मूर्तिः कृतान्तस्य नूनमन्यप्रकारताम् ॥ ८ ॥

जनपुण्यैरसामान्यैः कुट्टनी कुट्टनी नृणाम् ।
कङ्काली वालकंकाली गर्भिता व्रजतु क्षयम् ॥ ९ ॥

रामेण ताटका मिथ्या हता कृष्णेन पूतना ।
विश्वकण्टकतां याता निहता किं न कुट्टनी ॥ १० ॥

नूनं बिभेति कुट्टन्याः सोऽपि सर्वहरो यमः ।
स्नायुचर्मास्थिशेषापि सा मायेव यदक्षया ॥ ११ ॥

कलहोल्लुञ्चितकचा त्रुटितश्रवणद्वया ।
छिन्ननासा पिशाचीव घटयत्येव कुट्टनी ॥ १२ ॥
श्वपुच्छैश्छागशृङ्गैश्च व्यालैरुष्ट्रगलैः खलैः ।
कुट्टनीहृदयान्मन्ये कौटिल्यमुपजीव्यते ॥ १३ ॥
यौवने मूल्यकुल्येव तुलेव रतिविक्रये ।
पण्यस्त्री[illegible] कृत्वा [illegible] कुट्टनी ॥ १४॥
जाने जाम्बवतो ज्येष्ठा जननी वृद्धकुट्टनी ।
रामायणसहस्राणां साक्षिणी कथमन्यथा ॥ १५ ॥
[illegible] ।
[illegible] कुट्टनी कार्यगौरवात् ॥ १६ ॥
कुट्टन्या [illegible] नरः [illegible]ः ।
सविषाणखुरो मेषः सौनिकेनेव गण्यते ॥ १७ ॥
वात्सल्यपेशलगिरा सर्वमातेव कुट्टनी ।
करोति पुत्रेत्याह्वानं पुराणस्यापि वेधसः ॥ १८ ॥
न हृद्यस्त्वत्परः काण खल्वाट शोभसे परम् ।
इति वित्तार्थिनी स्तौति कुरूपमपि कुट्टनी ॥ १९ ॥
हरत्यपक्वमनिशं पक्वं गिलति लाघवात् ।
बहूच्छिष्टं विधत्ते च लुण्ठिता कुट्टनी नृणाम् ॥ २० ॥
कामिनः सप्रयत्नस्य बन्धकीभोजकारिणः ।
न तृप्यति महाकाली महिपस्यापि कुट्टनी ॥ २१ ॥
अदृश्योपक्रमैस्तैस्तैः करोति सुशिरं नरम् ।
यत्सत्यं जृम्भमाणस्य जिह्वां नयति कुट्टनी ॥ २२ ॥
रात्रौ विषूचिकाक्रान्ता क्रन्दती वान्तभोजना ।
परिष्वक्ता बन्धुजनैः पुनर्जातेव कुट्टनी ॥ २३ ॥

छिन्नार्धनासिका मात्रा........विकृतानना ।
जिह्वां प्रसार्य महती .... .... .... ॥ २४ ॥
.... .... ... ... .... .... ।
... .... .... ... ... .... ॥ २५ ॥
.... .... .... .... .... .... ।
.... ... .... .... .... ... ॥ २६ ॥
भृगुतुङ्गं व्रजामीति कृत्वा पुण्यदिनावधिम् ।
भुंक्ते नानारसाहारं कुट्टनी बान्धवाहृतम् ॥ २७ ॥
ज्वरातीसारशोफार्ता तीर्थं नीता स्वबान्धवैः ।
दिनैः प्रतीपमायाति कुट्टनी विजयेश्वरात् ॥ २८ ॥
चौराः सर्वे स्थिताः केन नीता सा हेमवालिका ।
इत्युक्त्वा कुट्टनी स्वस्था निष्कासयति बान्धवान् ॥२९ ॥
कामिनः सुरतेच्छायां वेश्याविन्यस्तचक्षुषः ।
पूर्वराजकथाव्याजैर्विघ्नं चरति कुट्टनी ॥ ३० ॥
क्षीणं व्यसनिनं मूढं दुर्दशेव विनाशिनी ।
कुट्टनी प्रेरयत्येव सपत्नकलहादिषु ॥ ३१ ॥
विरक्ता रिक्तहस्तस्य प्रच्छन्नव्यक्तयुक्तिभिः ।
सक्ता निष्कासनोपाये निद्रां नायाति कुट्टनी ॥ ३२ ॥
सर्वस्वेनाप्यसन्तुष्टा रूक्षा स्नेहशतैरपि ।
निर्मिता कामिनां विघ्नः कृतघ्ना केन कुट्टनी ॥ ३३ ॥

नयननयनसक्ता रक्तमांसप्रसक्ता
सकलसकललोकग्रासमुक्ताट्टहासा ।
कलितकलितगङ्गस्फारसंचारचारा
भ्रमति जगति पुंसां कुट्टनी कुट्टनी सा ॥ ३४ ॥

---

॥ कुट्टनीवर्णनं नाम चतुर्थ उपदेशः ॥

---

## ( पञ्चम उपदेशः )

क्षीणाय गुणहीनाय सदोषाय कलाभृते।
विटाय कृष्णपक्षेन्दुकुटिलाय नमो नमः॥ १॥

सर्वोद्वेगकरी चेष्टा भुजङ्गस्य विलासिनः।
विटस्यानेकजिह्वस्य भोगमात्राभिमानिनः॥ २॥

परदारानुबद्धस्य सरागस्य विकारिणः।
विशेषं नाधिगच्छामि विषस्य विटकस्य च॥ ३॥

सदा विप्लवशीलेन कोपनेन प्रमादिना।
चटुलेन विटः स्पष्टं मर्कटेनोपमीयते॥ ४॥

अन्तर्मुखोऽन्तरालीनो ध्यानवान्संहृतेन्द्रियः।
क्षणाद्याप्तो योगित्वमात्मारामस्थितिर्विटः॥ ५॥

वेश्याभिस्थूत्कृतमुखः सुजनेन विवर्जितः।
अमङ्गलाकृतिरिव भ्राम्यतेऽविरतं विटः॥ ६॥

सूचीहस्तः सूत्रधारः सकङ्कणप्रवेशकः।
क्षीणो नटायते स्पष्टं विटः कपटनाटके॥ ७॥

विटो राम इवाभाति काकुत्स्थः कुलटागृहे।
निकृत्तकुट्टनीशूर्पणखाश्रवणनासिकः॥ ८॥

गतागतेष्वविन्नेन सततं चक्रचारिणा।
खरस्वनेन प्रकटं विटेन शकटायते॥ ९॥

शूरो दोषाकरः स्त्रीणां वक्रश्चित्ते खलो बुधः।
गुरुः पापे व्यये शुक्रो विटः पथि शनैश्चरः॥ १०॥

वेश्याभिर्विप्रलब्धोऽपि निरस्तोऽप्यसकृद्विटः।
पुनर्विशति तद्गेहं श्वा हतो लगुडैरिव॥ ११॥

क्षीणः कृतोपवासोऽपि शून्यदेवकुले क्वचित् ।
मिथ्यैव भोगानाचष्टे यैर्विराटायते विटः ॥ १२ ॥
निदाघे स्थूलवसनं माघे तनुतराम्बरम् ।
पिङ्गं धत्ते विटो वेश्याहस्तोद्धंसनकुङ्कुमैः ॥ १३ ॥
विलेपनाङ्कितपटः स्वदत्तनखमण्डितः ।
वेश्यासम्भोगसौभाग्यं याति प्रकटयन्विटः ॥ १४ ॥
फणाटोपकृतास्फोटविचटत्पटपल्लवः ।
विटस्ताम्बूलगण्डूषैर्वेश्याभिः परिपूर्यते ॥ १५ ॥
उदञ्चितकचः किञ्चिच्चिबुकश्मश्रुवेष्टने ।
दिने देवगृहाधीशवदनं वीक्षते विटः ॥ १६ ॥
दर्पयन्दन्तताम्बूलो दन्त्यप्रायाक्षरैः पदैः ।
अलग्नोष्ठपुटो वक्ति कत्थनः कटुको विटः ॥ १७ ॥
रूक्षैः पश्चात्पुरः स्निग्धैः कचैः कृत्रिमकुञ्चितैः ।
शिरो विलोलयन्ब्रूते वेश्यां कशधनो विटः ॥ १८ ॥
सुचिरं वालकं कृत्वा हस्ते प्रस्ताववर्जितम् ।
अङ्गुल्या वर्णयत्येव सर्वं सर्वोद्भवो विटः ॥ १९ ॥
यत्नेन खादिरं रागं रक्षन्वद्धामिवाधरे ।
प्रपायां मण्डकं भुंक्ते वेशमात्रधनो विटः ॥ २० ॥
निद्रां न याति विवलन्पलालशयने निशि ।
तूस्तप्रावरणं दृष्ट्वा ...................... ॥ [illegible] ॥
.................... सजने जननीं पुरः ।
ममेयं कुम्भदासीति वक्ति मानधनो विटः ॥ २२ ॥
टक्राकोटिटाङ्कारविस्फुटन्मस्तको रटन् ।
खल्वाटः शङ्कितो याति वेश्यावेश्म जरद्विटः ॥ २३ ॥

ऋणेन खण्डितो रागी पुंश्चलीनखमण्डितः।
सपत्नैर्दण्डितो याति विदेशं विटपण्डितः॥ २४॥

मासमात्रं शठः स्थित्वा क्वचित्स्वशकुटीरके।
प्रगल्भते दाक्षिणात्यभंगीभणितिभिर्विटः॥ २५॥

दुर्निमित्तमिवासह्यं यूकानां विपुलं पटम्।
जूटं बध्नाति हा कष्टं वहिर्देशगतो विटः॥ २६॥

रसायनैर्बिलज्ञानैर्योगशास्त्रैरसङ्गतैः।
गन्धयुक्तिकथाभिश्च मुग्धान्भुंक्ते जगद्विटः॥ २७॥

क्षपितविकलकालो धातुवादी विटाग्रयः
सततमलिनभस्त्राभस्ममूषांगहस्तः।
विकटकचकरालः कज्जलालिप्तभाल-
श्चरति रसविदग्धो दग्धचीरः पिशाचः॥ २८॥

॥ विटवर्णनं नाम पञ्चम उपदेशः॥

( षष्ठ उपदेशः )

नमश्छात्राय सततं सत्रे ग्रामार्धहारिणे।
उग्राय विषभक्षाय शिवाय निशि शूलिने॥ १

कंकालकङ्कालसदृशश्छात्रो देशान्तरागतः।
करङ्कशंकया दूरात्सजने वर्ज्यते जनैः॥ २॥

क्षत्रिणः सपवित्रस्य स्पर्शहुङ्कारकारिणः।
लज्जन्ते मुनयोऽप्यग्रे गौडस्यापरपाकिनः॥ ३

ग्रहवारेषु भुञ्जानः स्नातकः संशितव्रतः।
मणतश्चान्नसंकाङ्क्षी जपति प्रहरद्वयम्॥ ४॥

2522



अवाप्ततिलकः सत्रे भोज्यैरुद्वर्तनैश्च सः ।
भुजङ्गः कञ्चुकमिव त्यक्त्वा सञ्जायते नवः ॥ ५ ॥
भाटीः पृच्छति वेश्यानां द्यूतं पृच्छति निर्जितम् ।
मांसं संपृच्छति भोज्ये व्रतखिन्नेषु देशिकः ॥ ६ ॥
छात्रः प्रवृत्तः पाण्डित्ये वृद्धकीरजिगीषया ।
कष्टेन जानात्योंकारं स्वस्तिज्ञाने कथैव का ॥ ७ ॥
अलिपिज्ञोऽप्यहंकारस्तब्धो विप्रतिपत्तये ।
गौडः करोति प्रारम्भं भाष्ये तर्के प्रभाकरे ॥ ८ ॥
स्पर्शं परिहरन्याति गौडः कक्षाकृताञ्चलः ।
कुञ्चितैनैकपार्श्वेन दम्भभारभरादिव ॥ ९ ॥
अलक्तकाङ्कितोद्धृष्टनखश्चित्राम्बरोऽथ सः ।
लज्जते मलपत्रेण चक्रनाराचसञ्चये ॥ १० ॥
क्रुद्धः कर्मकरान्सर्वान्निरस्य लगुडाहतान् ।
तमेव सहते दासं तरुणी यस्य गेहिनी ॥ ११ ॥
उपानत्कुत्सितारावगर्वितः स शनैर्व्रजन् ।
लोहितक्षुरिकापट्टवेष्टितां वीक्षते कटीम् ॥ १२ ॥
लीलाञ्चितलतापाणिर्भ्रूविलासविकारकृत् ।
वेश्यावेश्माग्ररथ्यासु सायं भ्रमति देशिकः ॥ १३ ॥
कितवः कुट्टनी वेश्या चर्मकारः सनापितः ।
पञ्च गौडशरण्डस्य करण्डग्रन्थिभेदिनः ॥ १४ ॥
निर्दीपपात्रतुल्यास्यकान्त्या जितशनैश्चरः ।
गीयते रूपकन्दर्पश्छात्रो दुर्गतगायनैः ॥ १५ ॥
यातः प्रसिद्धिं काठिन्यादविश्रान्तरतिः सदा ।
त्रिगुणेनापि मूल्येन वेश्यां नाप्नोति देशिकः ॥ १६ ॥

यदैव शयने गाढं जूटं बध्नाति दैशिकः।
तदैव हा मृतास्मीति वेश्या ब्रूते भयार्दिता ॥ १७ ॥
भाटीं गृह्णाति या वेश्या परनाम्नापि दैशिकात् ।
सैव तस्याः कटीशूलपथ्ये याति चतुर्गुणा ॥ १८ ॥
यस्योपस्पृशतः शौचे पर्याप्ता नाभवन्नदी ।
स एव भुंक्ते वेश्याभिरुत्सृष्टं मधुभोजनम् ॥ १९ ॥
शीतकाले शिरःशाटी वेश्यावेश्मसु दैशिकः ।
हसन्कालमुखः शुक्लदशनो वानरायते ॥ २० ॥
रण्डां परवधूं वापि यत्नादन्वेष्टुमिच्छति ।
पितुर्नाम्ना परिचयं स करोति गृहे गृहे ॥ २१ ॥
हसन्ति किं भणन्तीति मुग्धोक्त्या परयोषितः ।
विश्वास्य सेवते धूर्तः सत्रभोजनवर्णनैः॥ २२ ॥
चञ्चत्कर्णसुवर्णाकः स्थूलत्रिगुणवालकी ।
प्रभाते धनदाकारस्तूर्णं निर्याति दैशिकः ॥ २३ ॥
स पिशाच इवाभाति दिनान्ते द्यूतनिर्जितः ।
नग्नो भग्नमुखः पांसुलिप्तसत्रपसत्रपः ॥ २४ ॥
उदराबद्धवस्त्रेण ग्रन्थिजूटेन नादिना ।
लगुडोद्धतहस्तेन च्छात्रेणोन्मूल्यते मठः ॥ २५ ॥
अनेकक्षुरिकाघातक्षुण्णकुक्षेः क्षयैषिणः ।
को नाम गौडयक्षस्य सत्रे याति विपक्षताम् ॥ २६ ।
भुक्तं करोति न प्रीत्या न भयान्नच गौरवात् ।
गौडश्चरति लोकेऽस्मिन्दुर्ग्रहोऽपि सविग्रहः ॥ २७ ॥
द्वादश्यामन्यवद्गौडः सत्रच्छेदादुपोषितः ।
स्वयं पक्केन कुरुते मत्स्यमांसेन पारणम् ॥ २८ ॥

नापितश्चर्मकारो वा धीवरः सौनिकोऽपि वा।
स्वदेशे दैशिको नूनं सन्ध्यापाठं न वेत्ति यत् ॥ २९ ॥
सत्रे च्छात्रेण पात्रेण कृते भोज्यप्रातिग्रहे।
तुष्यन्ति देवता वेश्याः क्षीरिणीघृतमोदकैः ॥ ३० ॥
वेश्यासक्तो द्यूतकरश्चाक्रिकः प्रायकृत्सदा।
कुक्षिभेदी मठवने च्छात्रः पञ्चतपा मुनिः ॥ ३१ ॥
न ब्रह्मचारी न गृही न वनस्था नवा यतिः।
पञ्चमः पञ्चभद्राख्यश्छात्राणामयमाश्रमः ॥ ३२ ॥
दैशिकः कृपया येन पीतकोशः प्रवेशितः।
तस्यैव लिखति प्राये ब्रह्महत्यां विपाशनः ॥ ३३ ॥
वेश्यावारज्वरः सत्रसन्निपातो मठक्षयः।
न सङ्ग्रहैर्न हृदयैः साध्यतामेति दैशिकः ॥ ३४ ॥
शृंगग्राही दधिक्षीरे मृदाघातेषु दण्डधृत्।
मठच्छात्रः सदाच्छत्री न तथापि स दीक्षितः ॥ ३५ ॥
चाक्रिकः शिवतां यातश्चौरः कर्मकरैर्धृतः।
गौडो गर्वोन्नतग्रीवष्ठकुरोऽस्मीति भाषते ॥ ३६ ॥
सत्रान्नेनोदरस्थेन ये मृता वृद्धदैशिकाः।
ते सत्रतूर्ये क्रोशन्ति जातास्तत्रैव कुक्कुटाः ॥ ३७ ॥
याचते पण्यमधिकं मूल्यमल्पं प्रयच्छति।
वणिजस्तिष्ठति पुरः प्रभाते दैशिकः कलिः ॥ ३८ ॥
मत्स्या मत्स्यमिवाश्नन्ति भागीकृत्यातुरं क्षणात्।
छात्राश्छत्रकरण्डादिपटशाटककम्बलैः॥ ३९ ॥
श्राद्धपक्षे मठच्छात्रो भुक्त्वा ठक्कगृहे क्वचित्।
न पश्यत्यूर्ध्वनयनः शूलारूढ इव क्षितिम् ॥ ४० ॥

नायं मठः शठमठः प्रांशुर्हठमठोऽपि वा ।
वृद्धराक्षसपूर्णेयं घोरा दारुगिरेर्गुहा ॥ ४१ ॥
मठश्मशाने वेतालाः पिशाचाः स्नानकोष्ठके ।
घटयन्ति जनं छात्राः सत्रे सन्त्रासभैरवाः ॥ ४२ ॥
कुपितं कपिमालिङ्ग्य कण्ठे बद्ध्वा महोरगम् ।
गौडं चातुरमासाद्य वैद्यस्य कुशलं कुतः ॥ ४३ ॥
स्नाने दाने व्रते श्राद्धे निष्कारणरुषा ज्वलन् ।
मातरं चोदयामीति वदन्सर्वं करोति सः ॥ ४४ ॥
व्रजति दिनमखिन्नः सत्रपां सत्रपालीं
रमयति च कुमारीं दन्तरूपां विरूपः ।
क्षपयति भजमानः स्वां कुलालीं कुलालीं
विलसति मठचट्टः पापकारी विकारी ॥ ४५ ॥

॥ छात्रवर्णनं नाम षष्ठ उपदेशः ॥

## ( सप्तम उपदेशः )

नुग्रः पुष्पवतीं कान्तां कन्यां यौवनशालिनीम् ।
पुरुषस्पर्शरहितां श्वभ्रजातां लतामिव ॥ १ ॥
अविद्ययेव जरया स्पृहया च विमोहितः ।
कुमारीं याचते वृद्धः कदर्य इव संपदम् ॥ २ ॥
विवाहं परलोकार्थं करोत्येष विचक्षणः ।
इति वृद्धस्य वरणं वक्ति स्मितमुखो जनः ॥ ३ ॥
कृतारुचिः पृथुश्वासमनोदृष्टिविरागवान् ।
कन्याया वरणं वृद्धो मूर्तो ज्वर इवागतः ॥ ४ ॥

अकाले जरया पुत्रि व्याप्तोऽयं धनिनां वरः।
इति वृद्धः पिता ब्रूते तनयामश्रुवर्षिणीम् ॥ ५ ॥
वृद्धहस्तेन कुचयोः स्पर्शो मे कथमेतयोः।
इत्युच्छ्वासवती कान्तं कन्या शोचति यौवनम् ॥ ६ ॥
आलम्भ्य कन्यामञ्जर्या विवाहे पाणिपल्लवम् ।
वृद्धः कुचफलन्यस्तवदनो वानरायते ॥ ७॥
वधूर्वरोत्सवायाततरुणन्यस्तलोचना।
नोपसर्पति वृद्धस्य शय्यां वध्यशिलामिव ॥ ८ ॥
भार्यासमागमे वृद्धः प्रणामानतमस्तकः।
पादास्फोटनभग्नास्यः पतितो मूर्छितः क्षितौ ॥ ९ ॥
लालापूर्णेन वक्त्रेण परिचुम्बनमीहते।
धिगहो वत नष्टा धीरिति वृद्धं ब्रवीति सा ॥ १० ॥
पितुः पितामहोऽस्तीति त्वत्तुल्यः किं न लज्जसे।
आनीताहं कुपतिना वद कस्य कृते त्वया ॥ ११ ॥
इति प्रलापिनीं वृद्धः शयनं याचते वधूम्।
वाक्यैः पतितदन्तालीगलल्लालालवाकुलैः ॥ १२ ॥
वधूर्वृद्धभुजङ्गेन स्पृष्टा हाकष्टवादिनी।
दष्टेव खट्वामुत्सृज्य गेहाद्गेहं पलायते॥ १३ ॥
बलाद्बन्धुजनैर्नीता पुनः शय्यानिकेतनम्।
वधूर्वृद्धस्य संस्पर्शं चण्डालस्येव रक्षति ॥ १४
पृथगंशुकसंवीतां सुप्तामालिङ्गतः प्रियाम्।
वृद्धस्य निद्रा नायाति कुपितेव तदीर्ष्यया॥ १५ ॥
रजस्वलोत्सवे वध्वाः पूर्वजारसमागमात्।
प्रातः क्षिपति सिन्दूरं वृद्धस्य वदने जनः॥ १६ ॥

विधेयं सकलाज्ञासु पुष्पालंकारवस्त्रदम्।
कटुकौषधवद्वृद्धं मुहूर्तं सहते वधूः ॥ १७ ॥

मुहुः शक्तिदरिद्रस्य गूढांगं स्पृशतो मुहुः।
न रतिर्विरतिर्वापि स्थविरस्य प्रजायते ॥ १८ ॥

प्रमादाद्यदि वृद्धस्य शक्तिराकालिकी भवेत्।
तदर्थं तस्य निर्यान्ति शुक्रेणैव सहासवः ॥ १९ ॥

पीनस्तनोरुजघनां जीर्णवीणोपमाकृतिः।
तरुणीं संस्पृशन्वृद्धः शुष्कोऽप्यायाति शुष्कताम् ॥ २० ॥

वृद्धस्य वृष्यैराहारैर्वाजीकरणमिच्छतः।
अतीसारैः सवमनैर्नष्टा पुष्टिस्त्रिवार्षिकी ॥ २१ ॥

अहो वृद्धस्य पर्यन्ते लग्नः सुकृतसञ्चयः।
भार्या सुरतमन्त्रेण नामग्रहणकारिणी ॥ २२ ॥

गर्भिणी परबीजेन वृद्धस्योत्सवकारिणः।
ददात्यनुज्ञां सततं पादसंवाहने वधूः ॥ २३ ॥

प्रहर्षात्पादपतनैर्बन्धुमध्ये वधूगिरा।
पुत्रजन्मनि वृद्धेन सपत्नोऽपि निमन्त्रितः ॥ २४ ॥

घुणजग्धस्य दग्धस्य तरोर्जातोऽयमंकुरः।
इति ब्रुवाणा वृद्धस्य प्रनृत्यन्त्युत्सवे स्त्रियः ॥ २५ ॥

षष्ठीप्रजागरेणैव वृद्धस्याजीर्णकारिणः।
पर्यन्तकारी विषमः श्वासः समुपजायते ॥ २६ ॥

धन्या त्वं वृद्धदयिते पुत्रिकाविधवाधुना।
गृहिणी स्त्रीभिरित्युक्ता बाष्पं नोज्झत्यमङ्गलम् ॥ २७ ॥

अभियुक्तैस्तथा चोक्तं कैश्चित्कुशलवादिभिः।
भाग्ययोग्यं न नारीणां यौवने म्रियते पतिः ॥ २८ ॥

माश्रौषं मापि काद्राक्षं निंद्यं सर्वापदां पदम् ।
स्थविरं तरुणीभार्यं वेश्यासक्तंच निर्धनम् ॥ २९ ॥

क कियत्किं तवास्तीति कण्ठप्राप्तार्धजीवितम् ।
वृद्धं चौरमिवाभ्येत्य धनं पृच्छति गेहिनी ॥ ३० ॥

विरतसुरतशक्तिः स्पर्शमात्रैकभक्ति-
निशि निशितवचोभिर्भर्त्स्यमानो गृहिण्या ।
भुजभुजगनिवद्धं स्वक्षये वृद्धयक्षः
सुभगभगनिधानं रक्षति न्यस्तहस्तः ॥ ३१ ॥

---

॥ वृद्धभार्यावर्णनं नाम सप्तम उपदेशः ॥

---

## ( अष्टम उपदेशः )

एकत्र संक्षिप्तधिया प्रकीर्णजनवर्णनम् ।
देशभाषापदैर्मिश्रमधुना क्रियते मया ॥ १ ॥

रागद्वेषसमाकुल-
मुग्रमहामोहलोभदम्भभयम् ।
गुरुमपि लाघवहेतुं
भवमिव बहुविभ्रमं वन्दे ॥ २

गुणरहितो रुतकारी
शिष्यवधूनां सदा गुरुर्गदितः ।
दीनारक्षयकरणा--
द्दीक्षेत्युक्ता कृता तेन ॥ ३ ॥

सुलभमहो वत पुंसां
कलिकाले लीलयैव मोक्षपदम् ।
हीषामण्डकमधुना
वक्ति गुरुर्ज्ञानसर्वस्वम् ॥ ४ ॥

गुरुः

लुण्ठितसकलसुरद्विज–
पुरनगरग्रामघोषसर्वस्वः ।
पुनरपि हरणाकांक्षी
व्रजति गुरुं दीक्षितो दिविरः ॥ ५

कलमशिखाहतजनता-
दीनतराक्रन्दलब्धविभवस्य ।
दिविरस्योन्नतिहेतो–
र्योगविधाने मतिर्भवति ॥ ६ ॥

वञ्चनविरचितपट्टली–
संग्रहमिश्रैश्च दीर्घसञ्चारः ।
निगिलति मेषमशेषं
तालक्षुद्रोऽथ वाचालः ॥ ७ ॥

दिविरः

वक्त्रालोकिनि सदने
प्रागल्भ्याद्दासभावमानीते ।
पत्यौ विरचितवेशा
याति गुरुं दीक्षिता पत्नी ॥ ८ ॥

पशुसंस्पर्शाद्विमुखी
समयविहीनस्य गेहिनी भर्तुः ।

आयाति सदा कृत्वा
गुरुसुरतपवित्रमात्मानम् ॥ ९ ॥
खरतरपृष्ठकटीतट—
मन्थरगमना गृहानेत्य ।
पादाघातैः पत्नी
हन्ति पतिं भोजनस्य चिरात् ॥ १० ॥

कुलवधूः

मधुपाने कृतबुद्धिः
कौलकथानष्टजातिसंकोचः ।
मत्स्यशरावकहस्तो
गुरुगृहमायाति दीक्षितो भट्टः ॥ ११ ॥
घटगलगलगलशब्दै-
र्गलपूरं भैरवं पिबन्भट्टः ।
संलक्ष्यते प्रवाहे
लुठित इवाम्भोभरात्खिन्नः ॥ १२ ॥
नीत्वा निखिलां रात्रिं
क्षीवो वान्तासवः श्वलीढास्यः ।
अभिवादनपरिशुद्धः
प्रातर्भट्टोऽन्यभट्टेषु ॥ १३ ॥

भट्टः

निक्षेपक्षयकारी
निह्नवदक्षः कलाक्षपायक्षः ।
वणिगर्थोदयकांक्षी
गुरुगृहमाप्तो न मोक्षार्थी ॥ १४ ॥

मार्जनरेणुकरालो
गुडमधुघृतपिङ्गतैललिप्तकरः।
ग्राहकघट्टनसक्तो
हट्टपिशाचो वणिङ्मूर्तः॥ १५॥

दुर्गन्धोत्कटसंचित-
धननिचयक्लिन्नहट्टनिगडस्य।
वणिजः कृतो विधात्रा
श्रीगुरुनाथः मणालनिष्कर्षः॥ १६॥

वणिक्

सारस्वतमन्त्रार्थी
किंचित्संस्कारलिप्तजिह्वाग्रः।
कुलवागीशीसिद्ध्यै
याति गुरुं काव्यहेवाकी॥ १७॥

अज्ञातधातुलिंगं
मुखकूणनमुल्बणमपक्कम्।
अज्वरमिव वमति कविः
श्लोकं कृच्छ्रात्सह प्राणैः॥ १८॥

शुष्कश्लोकध्याना-
त्कुष्णाति दिवानिशं हृदयम्।
मन्दः काव्येन विना
गत्वा कुरुते न वृत्तिं स्वाम्॥ १९॥

कविः

जरया जीर्णशरीरः
कासश्वासमयासहतशक्तिः।

व्रजति रसायनसिद्धः
स्वगुरुं वृद्धोऽप्यशेषायुः ॥ २० ॥
मूषामुखविस्तीर्णै-
र्भूरिसुवर्णैः करोमि सम्पूर्णम् ।
निजजनमपरं च रसै-
रित्युक्त्वा निर्धनो म्रियते ॥ २१ ॥
पर्यन्तातीसारे
लग्ने वृद्धस्य सूतसिद्धस्य ।
शुद्धिर्देहमलानां
जातेत्युपजायते हर्षः ॥ २२ ॥
धातुवादी
श्वेतार्काकृतिगणपति-
मन्त्रार्थी कितवचक्रविजयाय ।
कितवः शफरीमण्डक-
सिन्दूरकरो गुरुं याति ॥ २३ ॥
मूत्रनिरोधात्कृच्छ्री
सततमनशनव्रतो जितो मौनी ।
धत्ते तापसवृत्तिं
चित्रं संसारवञ्चकः कितवः ॥ २४ ॥
भस्मविलिप्तशरीरः
सततं नग्नः कपालपाणिश्च ।
ईश्वररूपोऽपि भृशं
दारिद्र्यनिकेतनं कितवः ॥ २५ ॥
द्यूतकरः
गुरुरिति वितरति सर्वं
पशुसकाशा गतानुगात

बुद्धिविहीनः शिष्यः
केवलभक्तो गलाट····मध्यः ॥ २६ ॥

बुद्धिविहीनः

यागगृहेष्वासन्नो
भोजनपानैकसेवकः शिष्यः ।
चौरस्याप्यतिचौर-
श्चरति सदा वञ्चकस्य गुरोः ॥ २७ ॥
जय जय भगवन्मोक्ष-
क्षपणैकनिमित्तदत्तसंसार ।
मज्ञमधर्मपथे मा-
मुद्धर नाथ स्वहस्तेन ॥ २८ ॥
इत्यादिस्तुतिवचनैः
पादाग्रालीनमस्तकः स गुरोः ।
भुंक्ते पिबति च दम्भा-
द्भक्तिविहीनो महाधूर्तः ॥ २९ ॥

गुरुभक्तः

आह्वानेऽपि विसर्जन-
कारी देवस्य घर्घरैर्गीतैः ।
तुम्बकवीणास्कन्धः
प्रविशति यागे गुरोः शिष्यः ॥ ३० ॥
सोत्कण्ठेषु श्रोतृषु
कृच्छाद्दिवसेन सारणां दत्त्वा ।
तन्त्रीघर्षणखपखप-
शब्दैः श्रुतिशूल्माधत्ते ॥ ३१ ॥
नार तुम्बुरुगर्वः
स्वरटांकारशब्देन ।

मुहुरीक्षते मुखानि
श्रोतॄणां साधुवादाय ॥ ३२ ॥
वैणिकः
आतुर१धनसम्पूर्ण-
*चूर्णार्धश्लोकपाठपाण्डित्यः ।
वैद्यो गृहमेति गुरोः
शिष्यधनव्याधिभक्षस्य ॥ ३३ ॥
हृदयविहीनो धूर्तः
संग्रहरहितः स वंचको वैद्यः ।
वक्ति न दोषान्दोषी
चरकश्चरकं न जानाति ॥ ३४ ॥
शब्दाटोपैर्भयकृद्
दुःसहतरसंनिपातहतलोकः ।
वैद्यो विद्युदिवोग्रः
पतति निधानेषु सदनेषु ॥ ३५ ॥
वैद्यः
यूकांगश्चुल्लमुख-
श्चन्द्रापीडान्वयी नयनपीडः ।
कुलगुरुमेति ग्रामात्-
तण्डुलवस्त्रां वहन्कक्षे ॥ ३६ ॥
चूर्णहरिद्रारञ्जित-
नवहिमसूत्राभशीर्षशाटांकः ।
खञ्जन्या सितसङ्कट-
विकटमोचोटनिर्गताङ्गुष्ठः ॥ ३७ ॥
ऋणराशिर्लेखशतै-
र्भुक्तफलो निर्गुटः कुटुम्बिभटैः ।

नीराजदण्डभीत्या
प्रविशति वर्षेण राजकुलम् ॥ ३८ ॥

निर्गुटः

चरितैर्गौरवहेतु-
र्मूर्खाणां पण्डितो गुरुं याति ।
पदमन्दसानुनासिक-
दीर्घपदैर्जनिताशिरःशूलः ॥ ३९ ॥

वाक्यसमन्वयहीनो
मेलाकलमस्फारभारमलपत्रः ।
विपरीतच्छिन्नार्थैः
पठति पदैष्टिप्पिकाबन्धैः ॥ ४० ॥

विद्वानसाधुशब्दो
विस्मृतलिङ्गो नपुंसकप्रकृतिः ।
अविदितसकलसमासो
सत्सु सदा द्वन्द्वमेव जानाति ॥ ४१ ॥

नासास्थूलत्क्रान्तिमिश्रै-
र्मिथ्याकाशैः सकण्ठटांकारैः ।
पृष्टो विघ्नं कुरुते
विस्मृतलट्प्रत्ययो विद्वान् ॥ ४२ ॥

पण्डितः

मिथ्या प्रातः प्रात-
र्दाता सर्वस्य चर्मकार इव ।
लिखति भगार्चनकल्पं
याति गुरुं लेखको भक्तः ॥ ४३ ॥

संकरकृद्वर्णानां
विबुधानां पतितपंक्तिभिर्भयदः ।

सततामेध्यः पापी
कलिकालो लेखकः साक्षात् ॥ ४४ ॥
आकारशीर्षहारी
नवदरकारी पदार्थसंहारी।
अक्षरभक्षकमेला–
लिप्तमुखो लेखकः कालः ॥ ४५ ॥

लेखकः

नयनशिवः खल्वाटो–
........दन्तुरश्च रूपशिवः।
जटिनो विशन्ति यागे
ध्यानशिवस्तन्त्रमन्त्रहीनश्च ॥ ४६ ॥
त्रिफलाक्षालनविमलो
धूपाढ्यो भस्ममुष्टिहतयूकः।
वश्यानामुपधान
धन्यो जटिनां जटाजूटः ॥ ४७ ॥
तन्त्रस्थानायातः
प्रायतपोभिः शटीजपध्यानैः।
अश्नाति मठतपस्वी
शिवतासिद्ध्यै पुनर्विषमः ॥ ४८ ।

जटाधरः

कुशतिलराजतवालिः
कलितकरा स्नानदानजपनिरता।
मधुमांसाशनहीना
रण्डा त्राणं गुरुं स्मरति ॥ ४९ ॥

श्राद्धे भर्तुरविघ्नां
त्यक्त्वा सा भट्टभोजकश्राद्धम् ।
भक्त्या मृतकोद्धारे
जघनं हस्ते गुरोः क्षिपति ॥ ५० ॥
मण्डितपीवरजघना
घनकुचकलशा विलोलाक्षी ।
अस्तु सुखाय विटानां
नवरतरसवाहिनी रण्डा ॥ ५१ ॥
रण्डा
इत्युद्देशनिदर्शनेन विविधं यत्किञ्चिदुक्तं मया
तत्सर्वं स्मितकारणं सहृदयाः शृण्वन्तु सन्तः क्षणम् ।
क्षेमेन्द्रः प्रणतिं करोति न पटुर्लोकोपहासेष्वलं
किन्त्वेष व्यपदेशतः प्रतिपदं देशोपदेशः कृतः ॥ ५२

॥ प्रकीर्णवर्णनं नाम अष्टम उपदेशः ॥

दीर्घा दूरे दुराशा खलमुखरमुखालोकने का कथैव
सेवासन्तापशान्तिः प्रशमपरिचिता स्वान्तसन्तोपलक्ष्मीः ।
सर्वं श्लाघ्यं वदन्ते पयासि बुसरजः किन्त्वयं दोपलेषा-
स्यस्योन्मेषः कथानां हृदयपरिमलः शुद्ध्यते केन सार्धम् ॥१॥
दर्पान्धो नगरे तथापरगुणोत्कर्षे महामत्सरो
ग्रामे शेपवृषाश्रयस्तरुशिलाप्रायः परो गह्वरः ।
सोन्मेषप्रतिभः प्रगल्भवचसामन्तश्चमत्कारिणां
चित्रं नास्ति विचारचारुचतुरः प्रत्युत्तरार्हः सुहृत् ॥२॥

॥ कृतिः क्षेमेन्द्रस्येति शम् ॥

देशोपदेशः समाप्तः

अथ

# नर्ममाला।

## काश्मीरिकविद्वद्वरक्षेमेन्द्रविरचिता।



### ( प्रथमः परिहासः )

येनेदं स्वेच्छया सर्वं मायया मोहितं जगत्।
स जयत्यजितः श्रीमान्कायस्थः परमेश्वरः ॥ १ ॥

अस्ति स्वस्तिमतामग्र्यं मण्डितं बुधमण्डलैः।
खण्डिताखण्डलावासदर्पं कश्मीरमण्डलम् ॥ २ ॥

'यस्मिन्प्राज्यभुजस्तम्भस्तम्भिताहितविक्रमः।
त्रिविक्रम इव श्रीमाननन्तो बलिजिन्नृपः ॥ ३ ॥

तेन प्रजोपसर्गेषु वारितेषु विवेकिना।
दुर्नियोगिषु सर्वेषु नीतेषु स्मृतिशेषताम् ॥ ४ ॥

विदग्धचूडामणिना केनचित्केलिशालिना।
विद्वद्गोष्ठीगरिष्ठेन कश्चित्सहृदयो जनः ॥ ५ ॥

हासायातीतकायस्थचरितं कर्तुमीरितः।
करोति तत्प्रसंगेन दुराचारविडम्बनाम् ॥ ६ ॥

कृतविश्वप्रपञ्चाय नमो मायाविधायिने।
उत्पत्तिस्थितिसंहारकारिणे पुरहारिणे ॥ ७ ॥

व्यापिने जन्महीनाय निर्गुणाय कलाभृते।
सर्वाधिकारिणे सर्वकालकूटाशनाय ते ॥ ८ ॥

पुरा हतेषु दैत्येषु विष्णुना प्रभविष्णुना ।
दुःखितो दीर्घवैराग्यस्तद्देहगणनापतिः ॥ ९ ॥

गत्वा वैतरणीतीरं तपो वार्षसहस्रकम् ।
स्वमूत्रचुलकाहारः सुरवैराच्चकार सः ॥ १० ॥

तुष्टस्तमेत्य वरदः कलिः साक्षादभाषत ।
सर्वदेवविनाशाय गच्छ वत्स महीतलम् ॥ ११ ॥

अनेन कलमास्त्रेण मद्दत्तेन प्रहारिणा ।
विच्छिन्नदीपकुसुमान्धूपहीनान्निरम्बरान् ॥ १२ ॥

भ्रष्टालयान्धूलिलिप्तान्हाहाभूतांश्च्युभिर्वृतान् ।
करिष्यसि सुरान्सर्वान्भक्तपानीयकाङ्क्षिणः ॥ १३ ॥

जगति ब्राह्मणानाञ्च वृत्तिच्छेदे त्वया कृते ।
यज्ञच्छेदाद्विनंक्ष्यन्ति दिवि देवा न संशयः ॥ १४ ॥

दैत्यक्षये कृते यस्माद्भवता दिवि गोदितम् ।
तस्मात्त्वं दिविरो नाम भुवि ख्यातो भविष्यसि ॥ १५ ॥

मषी सकलमा यस्य काली कवलिताखिला ।
सदा सकलमायस्य तस्य सर्वार्थसिद्धिदा ॥ १६ ॥

त्वद्वंशेऽत्र भविष्यन्ति दैत्या दिविररूपिणः ।
यैरियं लब्धविभवैः पृथिवी न भविष्यति ॥ १७ ॥

इत्युक्त्वान्तर्हिते तस्मिन्कलौ कल्मषमानसः ।
याति काले सुविपुले महीमवततार सः ॥ १८ ॥

मौनिकेन प्रजातोऽथ भूतले मर्मघातिना ।
स कुद्दालकभार्यायां जगदुन्मूलनव्रतः ॥ १९ ॥

तीक्ष्णस्तदन्वये जातैः सर्ववृत्तिविलोपिभिः ।
रूक्षैर्न कस्यचिन्मित्रैः पापैः सर्वापहारिभिः ॥ २० ॥

कल्पान्तैरिव सर्वत्र ग्रस्तस्थावरजङ्गमैः ।
मषीविलिप्तसर्वाङ्गैः कालेनालिङ्गितैरिव ॥ २१ ॥
अधोगतैर्मृदुतरैस्तब्धैरभ्युद्धतैः क्षणात् ।
पुरीषैरिव कायस्थैः कायस्थैर्दीपकाग्निभिः ॥ २२ ॥
सेवाकाले बहुमुखैर्लुब्धकैर्बहुबाहुभिः ।
वञ्चने बहुमायैश्च बहुरूपैः सुरारिभिः ॥ २३ ॥
व्याप्तासु नगरग्रामपुरपत्तनभूमिषु ।
तस्मिन्काले मषीलिप्तकलमेन स्वमुल्लिखन् ॥ २४ ॥
ननर्त कर्तरीहस्तो भूर्जप्रावरणः कलिः ॥
भस्त्राकक्ष्याभिधानोऽयं सर्वभक्षो महासुरः ।
जातो जगत्क्षयायेति पिशाचनिचया जगुः ॥ २५ ॥
देवापहारिणा तेन गोग्रासलवणच्छिदा ।
भुज्यते पीयते भूरि दिविरेण दिवानिशम् ॥ २६ ॥
भक्त्या भगवतो विष्णोस्त्रैलोक्याक्रमणे पुरा ।
धर्मः प्रयातो द्रवतां मषीरूपेण तिष्ठति ॥ २७ ॥
देवनागमनुष्याणां नित्यनैमित्तिकच्छिदः ।
तस्य कायस्थनाथस्य त्रैलोक्याक्रमणे पुनः ॥ २८ ॥
कलिः प्रयातो द्रवतां मषीरूपेण तिष्ठति ।
यथा स्वर्गप्रदा गङ्गा तथैषा नरकप्रदा ॥ २९ ॥
व्यथितः प्रथितैर्ग्रामैर्निगडैर्लगुडैस्तथा ।
भयाद्वैराग्यमापन्नः स बभूव महाव्रती ॥ ३० ॥
भग्नव्यथोऽथ सन्त्यज्य व्रतं प्रायाद्दिगन्तरम् ।
कालेन विस्मृतोऽभ्येति भूर्जज्ञोऽलीकानिःस्पृहः ॥ ३१ ॥
क्रमाद्ग्रामनियोगेन नगरे गणनापतेः ।
दम्भसम्भावितः प्राप गृहकृत्यं विधिवशात् ॥ ३२ ॥

